उक्का। (३-५० कृद्धि०) वक्कलं। विक्कवो। (प्राय इति वलोपो न ५-१ ओ) वस्य, लुद्धओ। (३-५० धृद्धि० ३-५१ ध्=द् २-२ क्लोपः ५-१ ओ)(१) पिक्कं। (१-३ सू० स्पष्टम) रस्य, अक्को। (३-५०कृद्धि० ५-१ ओ) सक्को। (२-४३ श्=स्, शे० पूर्व०)। उल्का, वल्कलम्, विक्लवः, पक्वम्, अर्कः, शक्रः ॥ ३ ॥

## द्रे रो वा (२) ॥ ४ ॥

द्रशब्दे रेफस्य वा लोपो भवति। दोहो, (५-१ ओ) द्रोहो। चन्दो, (३-५६ दृद्धि० न शे० पू०) चन्द्रो। रुद्दो, (३-५० दृद्धि० ५-१ ओ) रुद्रो। द्रोह, चन्द्र, रुद्राः ॥ ४ ॥

## सर्वज्ञतुल्येषु ञः ॥ ५ ॥

सर्वज्ञतुल्येषु ञकारस्य लोपो भवति। सव्वज्जो। (३-३ र्-लोपः ३-५० वजयोर्द्धि० ओत्वं पू०) इंगिअज्जो। (४-१७ वर्गान्तो वा २-२ तुलोपः ञ्लोपे जद्धि० पू०) जानाते र्यान्येवं रूपाणि तत्र ञ्लोपः (३) ॥ ५ ॥

## श्मश्रुश्मशानयोरादेः ॥ ६ ॥

श्मश्रुश्मशानयोरादेर्वर्णस्य लोपो भवति। मस्सु। (२-४३ श्=स् ३-३ र्लोपः ३-५० सद्धि०) मसाणं। (२-४३ श्=स् २-४२ न्=णं ५-३० बि०) ॥ ६ ॥

## मध्याह्ने ह्स्य ॥ ७ ॥

मध्याह्नशब्दे हकारस्य लोपो भवति। मज्झण्णो। (३-२८ ध्य्=झ् ३-५० झद्धि० ३-५१ प्रथम झ्=ज् ४-१ आ=अ २-४२ न्=ण् ३-५० णद्धि० ५-१ ओ) ॥ ७ ॥

## ह्नह्लह्मेषु नलमां स्थितिरूर्ध्वम् ॥ ८ ॥

ह्न ह्ल ह्म इत्येतेषु अधःस्थितानां नकारलकारमकाराणां स्थितिरू-

---

(१) लोअद्धो इति क्वचित्, तत्र तुण्डरूपसमत्वादोत्वम् ॥ (२) वाधो रोलुक् ८। ४। ३९८। अपभ्रंशे संयोगादधोवर्तमानो रेफो लुग् वा भवति। उदाहृतं लोपाभावे अर्द्धे भवति परकको तो सहि मज्झु प्रियेण इति है० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(३) क० पु० मणोज्जो। अ० पा०। सर्वज्ञ, इङ्गित, मनोज्ञाः ॥

र्वमुपरिष्टाद्भवति। ह्रस्य, पुव्वण्हो। (४-१ पू=पु ३-३ रलोपः ३-५० वृद्धि० २-४२ न् = ण् ५-१ ओ) अवरण्हो। (२-१५ प् = व् ४-१ रा = र् शे० पू०) ह्रस्य, अल्हादो। (४-१ आ = अ ५-१ ओ) ह्रस्य, वम्हणो। (३-३ र्लोपः ४-१ आ = अ ५-१ ओत्वम्) ॥ ८ ॥

## युक्तस्य ॥ ९ ॥

अधिकारोऽयमापरिच्छेदसमाप्तेः, यदित ऊर्ध्वमनुक्रमिष्यामो युक्तस्येत्येवं वेदितव्यम्। वक्ष्यति "अस्थनि" (सू० ११) अट्ठी। (३-११ स्थ=ठ् ३-५० ठद्वि० ३-५१ ठ् = ट् ५-१८ दीर्घः) अस्थि। युक्तग्रहणं हलोऽन्त्यस्य मा भूत् ॥ ९ ॥

## ष्टस्य ठः ॥ १० ॥

ष्ट इत्येतस्य युक्तस्य ठकारो भवति। लट्ठी। (२-३२ य् = ल् शे० पू०) दिट्ठी। (१-२८ सू० स्प०, शे० पू०)। यष्टिः, दृष्टिः ॥ १० ॥

## अस्थनि ॥ ११ ॥

अस्थिशब्दे युक्तस्य ठकारो भवति। अट्ठी। (३-९ सू० स्प०) ॥ ११ ॥

## स्तस्य थः ॥ १२ ॥

स्तशब्दस्य थकारो भवति। उपरिलोपापवादः। हत्थो। (३-५० थद्वि० ३-५१ थ् = त् ५-१ ओ) समत्थो। (३-३ र्लोपः शे० पू०) थुई। (२-२ त्लोपः ५-१८ दीर्घः) थवओ। (२-२ प्रायो ग्रहणात् वलोपो न, क्लोपस्तु भवति ५-१ ओ) कोत्थुहो। (१-४१ सू० स्प०)। हस्तः, समस्तः, स्तुतिः, स्तवकः, कौस्तुभः ॥ १२ ॥

## स्तम्बे ॥ १३ ॥

स्तम्बशब्दे स्तकारस्य थकारो न भवति। तंबो। (३-१ स्लोपः ४-१७ वर्गान्तबिन्दुः ५-१ ओ) ॥ १३ ॥

## स्तम्भे खः ॥ १४ ॥

स्तम्भशब्दे स्तकारस्य खकारो भवति। खंभो। (४-१७ वर्गान्तविं० ओत्वं पू०) ॥ १४ ॥

## स्थाणावहरे ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थाणुशब्दे युक्तस्य खकारो भवति, अहरे हरेऽभिधेये न भवति।

खाणू। (५-१८ दीर्घः) अहर इति किम्? थाणू हरो। (३-१ सूलोपः शे० पू० ५-१ ओ)। स्थाणुः हरः ॥ १५ ॥

स्फोटके ॥ १६ ॥

स्फोटकशब्दे युक्तस्य खकारो भवति। खोडओ। (२-२० ट्=ड् २-२ कलोपः ५-१ ओ) ॥ १६ ॥

र्यशय्याभिमन्युषु जः ॥ १७ ॥

र्य इत्यस्य शय्याभिमन्युशब्दयोश्च युक्तस्य जकारो भवति। कज्जं। (४-१ आ=अ ३-५० ज्द्वित्वम् ५-३० विं०) सेज्जा। (१-५ सू० स्पष्टं) अहिमज्जू(१)। (२-२७ भ्=ह् ३-५० ज्द्वि० ५-१८ दीर्घः)। कार्य्यम्, शय्या, अभिमन्युः ॥ १७ ॥

तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः ॥ १८ ॥

एतेषु शब्देषु र्यस्य रेफो भवति। तूरं। (३-५४ र्स्य द्वित्वम् न ५-३० विं०) धीरं। (१-३९ सू० स्प०) सुंदेरं। अच्छेरं। पेरन्तं। (१-५ सू० स्प०) ॥ १८ ॥

सूर्ये वा ॥ १९ ॥

सूर्यशब्दे र्यकारस्य रेफादेशो भवति वा। सूरो, (५-१ ओत्वं) सुज्जो(२)। (पक्षे ४-१ ऊ=उ ३-१७ र्य=ज् ३-५० ज्द्वि० ओ० पू०) ॥१९॥

चौर्यसमेषु रिअं ॥ २० ॥

चौर्यसमेषु शब्देषु र्यस्य रिअमित्यादेशो भवति। चोरिअं। (१-४१ औ=ओ) सोरिअं। वीरिअं। (२-४३ श्=स् शे० पूर्व०) चौर्य, शौर्य, वीर्याणि। समग्रहणादाकृतिगणोऽयम् ॥ २० ॥

पर्यस्तपर्याणसौकुमार्येषु लः ॥ २१ ॥

एषु शब्देषु र्यस्य लकारो भवति(३)। पल्लत्थं। (३-५० ल्द्वि० ३-१२ स्त्=थ् ३-५० थ्द्वि० ३-५१ थ्=त् ५-३० विं०) पल्लाणं। (पूर्ववत्) सोअमल्लं। (१-२२ सू० स्पष्टम्) ॥ २१ ॥

---

(१) क० पु० शेषादेशयोर्द्वित्वमनादाविति द्वित्वम्। तत्र जकारस्य वर्गतृतीयत्वेन युक्ताभावाद् "वर्गेषु युजः पूर्वः" इत्यस्य न प्राप्तिः। अ०पा० ॥ (२) वाग्रहणात् "र्यशय्यादि" (३।१७) सूत्रेण जकारोऽपि ॥ (३) ल्लकारो भवति। क०पु० पाठः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्तस्य टः ॥ २२ ॥

र्त इत्येतस्य टकारो भवति । केवट्टओ । (१-३४ ऐ=ए, प्रायोग्रहणात् वलोपो न ३-५० वृद्धि० २-२ कलोपः ५-१ ओ) णट्टओ । णट्टई । (२-४२ न्=ण् शे० पू०) । कैवर्तक, नर्तक, नर्तक्यः(१) ॥ २२ ॥

पत्तने ॥ २३ ॥

पत्तनशब्दे युक्तस्य टकारो भवति । पट्टणं । ( ३-५० वृद्धि० २-४२ न्=ण् ५-३० बिं०) ॥ २३ ॥

न धूर्तादिषु ॥ २४ ॥

धूर्त इत्येवमादिषु त इत्येतस्य टकारो न भवति । धुत्तो । (३-३ र्लोपः ३-५० तृद्धि० ५-२६ ह्रस्वः ५-१ ओ) कित्ति । (३-३ र्लोपः ३-५० तृद्धि० ५-२६ ह्रस्वः ) वत्तमाणं । ( ३-३ र्लोपः ३-५० तृद्धि० २-४२ न्=ण् ५-३० बिं०) वत्ता । (४-१ आ=अ ३-३ र्लोपः शे० पू०) आवत्तो । (५-१ ओ शे० पू०) संवत्तओ । ( ३-३ र्लोपः ३-५० तृद्धि० २-२ क्लोपः शे० पू०) णिवत्तओ । (२-४२ न्=ण्० शे० पू०) वत्तिआ । (३-३ र्लोपः ३-५० तृद्धि० २-२ क्लोपः) अत्तो । कत्तरी । मुत्ती । (पूर्ववद्र्लोपो ह्रस्वादिकञ्च) । धूर्तः, कीर्तिः, वर्तमानम् , वार्ता, आवर्तः, संवर्तकः, निवर्तकः, वर्तिका, आर्तः, कर्तरी, मूर्तिः ॥ २४ ॥

गर्ते डः ॥ २५ ॥

गर्तशब्दे र्तस्य डकारो भवति । गड्डो । (३-५० ड्द्धि० ५-१ ओ)॥

गर्दभसंमर्द(२)वितर्दिविच्छर्दिषु र्दस्य ॥ २६ ॥

एतेषु र्दस्य डो भवति । गड्डहो । (३-५० ड्द्धि० २-२७ भ्=ह् ५-१ ओ) संमड्डो । (पूर्व०) विअड्डी । (२-२ तलोपः ३-३ र्लोपः ड्द्धि० पू० ५-१८ दीर्घः) विच्छड्डी । (पूर्व०) ॥ २६ ॥

त्यथ्यद्यां चछजाः ॥ २७ ॥

त्यथ्यद्य इत्येतेषां च छ ज इत्येते यथासंख्यं भवन्ति । त्यस्य,

---

(१) वट्टई पाठे वर्तत इति कचिदधिकम् ॥ (२) कचिद् विमर्द इत्यधिकः पाठस्तत्र विमड्डेति प्राकृतं बोध्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णिच्चं(१)। (२-४२ न्=ण् ३-५० चद्वि० ५-३० विं०) पच्चच्छं। (३-३ र्लोपः ३-५० च्=छ् ५-३० विं०) थ्यस्य, रच्छा। मिच्छा। पच्छं। (३-५० छ्द्वि० ३-५१ छ=च्) द्यस्य, विज्जा। (३-५० ज्द्वि०) वेज्जो। (१-३४ ऐ=ए पूर्व० ज्द्वि० ५-१ ओ)। नित्यम्, प्रत्यक्षम्, रथ्या, मिथ्या, पथ्यम्, विद्या, वैद्यः॥ २७॥

## ध्यह्योर्झः॥ २८॥

ध्य ह्य इत्येतयोर्झकारो भवति। ध्यस्य, मज्झं। (३-५० झ्द्वि० ३-५१ झ्=ज् ५-३० विं०) अज्झाओ। (५-१ ओ शे० पू०) ह्यस्य, वज्झओ। (४-१ आ=अ २-२ क्लोपः शे० पू०) गुज्झओ। (पूर्व०)। मध्यः, अध्यायः, वाह्यकः, गुह्यकः॥ २८॥

## ष्कस्कक्षां खः॥ २९॥

ष्कस्कक्षां खकारो भवति। ष्कस्य, सुक्खं। (३-५० ख्द्वि० ३-५१ ख्=क् ५-३० विं०) पोक्खरो। (१-२० सू० स्प०)। स्कस्य, खंदो। खन्धो। (४-१७ वर्गान्त विं० ५-१ ओ) क्षस्य, खदो। जक्खो। (२-३१ सू० स्प०) (२)॥ २९॥

## अक्ष्यादिषुच्छः॥ ३०॥

अक्षि इत्येवमादिषु क्षकारस्यच्छकारो भवति। अच्छी। (३-५० छ्द्वि०(३) ३-५१ छ्=च् ५-१८ दीर्घः) लच्छी। (३-२ मूलोपः शे० पू०) छुण्णो। (५-१ ओ) छीरं। (स्पष्टं) छुद्धो। (३-३ वूलोपः ३-५० धूद्वि० ३-५१ धू=द् ५-१ ओ) उच्छित्तो। (३-१ तपयोर्लोपः ३-५० छ्द्वि० ३-५१ चत्वं ३-५० तुद्वि० ५-१ ओ) सरिच्छं। (१-२ सू० स्प०) उच्छू। (१-१५ सू० स्प०) उच्छा। (५-४७ आत्मवत् कार्यं शे० पू०) रिच्छो। (१-३ ऋ=रि ३-५० छ्द्वि० ३-५१ छ=च् ५-१ ओ) मच्छिआ। (२-२ क्लोपः शे० पू०) छुअं। (२-२ तूलोपः ५-३० विं०) छुरं। (५-३० विं०) छेत्तं। (३-३ र्लोपः ३-५० तूद्वि० ५-३० विं०)।

(१) कश्चित्सच्चं, पच्चखं, पच्चच्चं। सत्यं, प्रत्यक्षं, पाश्चात्यमित्यधिकम्॥
(२) शुष्क, पुष्कर, स्कन्द, स्कन्ध, क्षत, यक्षाः। मुक्खमिति पाठे मुष्क इति॥
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri
(३) चकाररहितश्छकार आदेशो बोध्यः। तथैव च छुण्णादिषु दृश्यते॥

वच्छो। (३-५० छद्वि० ३-५१ छ=च् ४-१८ पुंवत् ४-६ स्लोपः ५-१ ओ
दच्छो। (पू०) कुच्छो। (५-१८ दीर्घः शे० पू०)। अक्षि, लक्ष्मी, क्षुण्ण
क्षीर, क्षुब्ध, उत्क्षिप्त, सदृक्ष, इक्षु, उक्षन्, क्षार, ऋक्ष, मक्षिका, क्षुत
क्षुर(१), क्षेत्र, वक्षस्(२), दक्ष, कुक्षि, इत्येवमादयः(३) ॥ ३० ॥

## क्षमावृक्षक्षणेषु वा ॥ ३१ ॥

एतेषु क्षकारस्य छकारो भवति वा। छमा, खमा(४)। (३-२९ क्ष्=ख्) वच्छो, रुक्खो। (१-३२ सू० स्प०) छणं, खणं। (पक्षे ३-२९ क्ष्=ख ५-३० बि०) 'वृक्ष' शब्दे ऋकारस्याकारे कृते क्षणशब्दे चोत्सवाभिधायिनि छत्वमिष्यते(५) ॥ ३१ ॥

## ष्मपक्ष्मविस्मयेषु म्हः ॥ ३२ ॥

ष्म इत्येतस्य पक्ष्मविस्मयशब्दयोश्च युक्तस्य म्हकारो भवति। ष्मस्य, गिम्हो। (३-३ रेफलोपः ह्रस्वः संयोगे—ई=इ ५-१ ओ
उह्मा। (५-४७ आत्मवत् कार्य्यं शे० पू०) पम्हो। (५-१ ओ शे० पू०)
विम्हओ। (२-२ यलोपः शे० पू०)। ग्रीष्म, उष्मन्, पक्ष्मन्, विस्मयाः ॥ ३२

## ह्नस्नष्णक्ष्णश्नां ण्हः ॥ ३३ ॥

ह्नादीनां ण्ह इत्ययमादेशो भवति। ह्नस्य, वण्ही। जण्हू। (५-१८
दीर्घः)। स्नस्य, ण्हाणं। (५-३० बि०, २-४२ न्=ण्) पण्हुदं। (३-३
र्लोपः १२-३ (६) त्=द् ५-३० बि०) ष्णस्य, विण्हू। (५-१८
दीर्घः) कण्हो। (३-६१ विप्रकर्षात् ऋ=अ ५-१ ओ) क्ष्णस्य, सण्हं
(२-४३ श्=स् विप्रकर्षात् बाहुलकेन लस्याद्रे ५-३० बिन्दुः) तिण्हं
(ह्रस्वः संयोगे ती=ति शे० पू०) श्नस्य, पण्हो। (३-३ र् लोपः ५-१
ओ) सिण्हो। (२-४३ श् = स् शे० पू०)। वह्निः, जह्नुः, स्नानम्, प्रस्नु-
तम्, विष्णुः, कृष्णः, श्लक्ष्णं, तीक्ष्णम्, तीक्ष्णम्, प्रश्नः, शिश्नः ॥ ३३

---

(१) क्षुरे विकल्पः। छुरो, खुरो इति पठन्ति केचित् ॥ (२) वृक्ष इ
केचित् ॥ (३) आर्षे इक्खू, खीर, सारिक्खमित्याद्यपि दृश्यते। हे०।
(४) क्षमा पृथिवी, खमा क्षान्तिः। हे० ॥ (५) क० पु० छणो। क्षण उत्स
इत्यर्थः। अ० पा० ॥ (६) व्यत्ययात्प्राकृतेऽपि, एवं खदो इत्यत्रापि बोध्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिह्ने न्धः ॥ ३४ ॥

चिह्नशब्दे युक्तस्य न्ध इत्ययमादेशो भवति । चिन्धं । (१-१२ सू० स्प०) ॥

ष्पस्य फः ॥ ३५ ॥

ष्प इत्येतस्य फ इत्ययमादेशो भवति । पुप्फं । (३-५० फद्वि० ३-५१ फ्=प् ५-३० वि०) सप्फं । (२-४३ श् = स शे० पु०) णिप्फाओ । (२-४२ न् = ण् २-२ प्लोपः फद्वित्वं पत्वं च पु० ५-१ ओ) । पुष्पम्, शष्पम्, निष्पापः ॥ ३५ ॥

स्पस्य सर्वत्र स्थितस्य ॥ ३६ ॥

स्प इत्येतस्य सर्वत्र स्थितस्य फ इत्ययमादेशो भवति । फंसो । (४-१५ बिन्दुः ३-३ र्लोपः २-४३ श् = स् ५-१ ओ) फंदणं । २-४२ न् = ण् ५-३० वि० शे० पु०) । स्पर्शः, स्पदनम् ॥ ३६ ॥

स्पि च ॥ ३७ ॥

स्पस्य क्वचित् पि इत्ययमादेशो भवति । पाडिसिद्धी । (१-२सू० स्प०) । प्रतिस्पर्द्धी ॥ ३७ ॥

बाष्पे अश्रुणि हः ॥ ३८ ॥

बाष्पशब्दे ष्प इत्येतस्य हकारो भवति अश्रुणि वाच्ये । बाहो । (५-१ ओ ३-५४ हद्वि० न) अश्रुणि किम् ? बप्फो । (४-१ वा = व ३-३५ ष्प् = फ् ३-५० फद्वि० ३-५१ फ् = प् ५-१ ओ) उह्मा(१) । (५-४७ आत्मवत्) । बाष्पः, ऊष्मा ॥ ३८ ॥

कार्षापणे ॥ ३९ ॥

कार्षापणशब्दे युक्तस्य हकारो भवति । काहावणो । (२-१५ प् = व् २-४२ न् = ण् ५-१ ओ) ॥ ३९ ॥

श्चत्सप्सां छः ॥ ४० ॥

एतेषां छकारो भवति । श्चस्य, पच्छिमं । (३-५० छद्वि० ३-५१ छ् = च् ४-१२ वि०) अच्छेरं । (१-५ सू० स्प०) त्सस्य, वच्छो । (५-१ ओ) वच्छरो । (३-५० छद्वि० ३-५१ छ् = च् ५-१ ओ) प्सस्य,

(१) क्वचिदयं पाठो न दृश्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिच्छा। जुगुच्छा। (स्पष्टं)। पश्चिमम्, आश्चर्यम्, वत्सः वत्सरः, लिप्सा, जुगुप्सा ॥ ४० ॥

### वृश्चिके ञ्छः ॥ ४१ ॥

वृश्चिकशब्दे श्चकारस्य ञ्छ इत्ययमादेशो भवति। विञ्छओ। (शे० १-१५ सू० स्प०) ॥ ४१ ॥

### नोत्सुकोत्सवयोः ॥ ४२ ॥

उत्सुक उत्सव इत्येतयोः छकारो न भवति। श्चत्सप्सां छ इति प्राप्ते प्रतिषिध्यते। उस्सुओ। (२-२ कलोपः ५-१ ओ) उस्सवो। (३-१ तूलोपः ३-५० सद्वि० २-२ प्रायोग्रहणात् लोपो न शे० पू०) ॥ ४२ ॥

### न्मो मः ॥ ४३ ॥

न्म इत्येतस्य म इत्ययमादेशो भवति। अधोलोपे प्राप्ते। जम्मो। (३-५० मद्वि० ५-१ ओ) वम्महो। (२-३६ सू० स्प०)। जन्म, मन्मथः ॥ ४३ ॥

### स्नज्ञपञ्चाशत्पञ्चदशेषु णः ॥ ४४ ॥

स्न ज्ञ इत्येतयोः पञ्चाशत्पञ्चदशशब्दयोश्च युक्तस्य णकारो भवति। स्नस्य, पज्जुण्णो। (३-३ रलोपः ३-२७ द्य्=ज् ३-५० जणयोर्द्वि० ५-१ ओ) ज्ञस्य(१), जण्णो। (२-३१ य्=ज् शे० पू०) विण्णाणं। (३-५० णद्वि० २-४२ न्=ण् ५-३० विं०) पण्णासा। (२-४३ श्=स ४-७ त्=आ शे० पू०) पण्णरहो। (३-५० णद्वि० २-१४ द्=र् २-४४ श्=ह् ५-१ ओ)। प्रद्युम्नः, यज्ञः, विज्ञानम्, पञ्चाशत्, पञ्चदश ॥४४॥

### तालवृन्ते ण्टः ॥ ४५ ॥

तालवृन्ते युक्तस्य ण्ट इत्ययमादेशो भवति। तालवेण्टअं। (१-१० सू० स्प०) ॥ ४५ ॥

### भिन्दिपाले ण्डः ॥ ४६ ॥

भिन्दिपालशब्दे युक्तस्य ण्ड इत्ययमादेशो भवति। भिण्डिवालो। (२-१५ प=व ५-१ ओ) ॥ ४६ ॥

---

(१) ज्ञो ञः ८।२।८३। ज्ञः सम्बन्धिनो ञस्य लुग् भवति। संजा, सण्णा। क्वचिन्न भवति, विण्णाणं। हे० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## विह्वले भह्वौ वा (१) ॥ ४७ ॥

विह्वलशब्दे युक्तस्य भकारह्वकारौ भवतो वा। विब्भलो(२), (३-५० भृद्वि० ३-५१ भ्=ब् ५-१ ओ) विह्वलो। (३-५४ ह्द्वित्वं न)। विह्वलः ॥ ४७ ॥

## आत्मनि पः ॥ ४८ ॥

आत्मशब्दे युक्तस्य पकारो भवति। अप्पा (३-५० पृद्वि० ५-४६ राजवत्कार्यम्-आ=अ) ॥ ४८ ॥

## क्मस्य ॥ ४९ ॥

क्म इत्येतस्य पकारो भवति। रुप्पं। (३-५० पद्वि० ५-३० बिं०) रुप्पिणी। (पू०)। रुक्मं, रुक्मिणी। योगविभागो नित्यार्थः ॥ ४९ ॥

## शेषादेशयोर्द्वित्वमनादौ॥ ५० ॥

युक्तस्य यौ शेषादेशभूतौ तयोरनादौ वर्तमानयोर्द्वित्वं भवति। शेषस्य तावत्, भुत्तं। (३-१ क्लोपः ३-५० तृद्वि० ५-३० बिं०) मग्गो। (३-३ र्लोपः ३-५० गृद्वि० ५-१ ओ) आदेशस्य, लट्ठी, (२-३२ सू० स्प०) दिट्ठी। (१-१८ सू० स्प०) हत्थो। (३-१२ सू० स्प०) अनादाविति किम्? खलिअं। (३-१ सूलोपः २-२ तृलोपः ५-३० बिं०) खंभो। (३-१४ सू० स्प०) थवओ। (३-१२ सू० स्प०)। भुक्तम्, मार्गः, यष्टिः, हस्तः, स्खलितम्, स्तम्भः, स्तवकः ॥५०॥

## वर्गेषु युजः पूर्वः ॥ ५१ ॥

युक्तस्य यौ शेषादेशावनादिभूतौ तयोर्द्वित्वेऽपि विहिते अध ऊर्ध्वे(३) च यौ वर्गेषु वर्णौ द्वितीयश्चतुर्थो वा(४) विहितस्तस्य पूर्वः प्रथमस्तृतीयो वा भवति। वर्गेषु युग्मस्य द्वितीयस्य प्रथमः, चतुर्थस्य तृतीयो द्वित्वेन विधीयते, अयुग्मयोः प्रथमतृतीयपञ्चमरूपयोः शेषादेशयोस्तु तावेव भवतः। शेषस्य, वक्खाणं। (३-२ उभयत्र य्लोपः ४-१ ह्रस्वः ३-५०

---

(१) वा विह्वले वौ वश्च ८।२।५८। विह्वले ह्वस्य भो वा भवति, तत्सन्नियोगे च विशब्दे वस्य वा भो भवति। भिब्भलो। हे० ॥ (२) क्वचिद् वेब्भलो, तत्र पिण्डसमत्वादेत्वं बोध्यम् ॥ (३) क०पु० ऊर्ध्वं०। अ०पा० ॥ (४) कु० पु० "अवशिष्टो विहितो यः" अ० पा० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खद्वित्वे पूर्व० ख्=क् २-४२ न्=ण् ५-३० बि०) अग्घो। (३-३ र्लोपः ५-१ ओ) मुच्छा। (४-१ ह्रस्वः) णिज्झरो। लुद्धो। णिब्भरो। (पु० दुलोपादि)। आदेशस्य, दिट्ठी। (१-२८ सूत्रतोऽनुसन्धेयम्) लट्ठी। (२-३२ सू० स्प०) वच्छो। (३-३० सू० स्प० शेषमवदातम्) विप्फरिसो। (३-३५ स्प्=स्फ् ३-६२ विप्रकर्षः पूर्वस्वरतया रिकारश्च २-४३ श्=स् ५-१ ओ) णित्थारो। (२-४२ न्=ण् ३-१२ स्त्=थ् शे० स्प०) जक्खो। (१-३१ सू० स्प०) लच्छी। (३-३० सू० स्प०) अट्ठी (३-११ सू० स्प०) पुप्फं। (३-३५ सू० स्प०। ३-५० सर्वत्र द्वित्वम्)। व्याख्यानम्, अर्घः, मूर्च्छा, निर्झरः, लुब्धः, निर्भरः, दृष्टिः, यष्टिः, वक्षः, विस्पर्शः, निस्तारः, यक्षः, लक्ष्मीः, अस्थि, पुष्पम् ॥ ५१ ॥

## नीडादिषु ॥ ५२ ॥

नीड इत्येवमादिषु अनादौ वर्तमानस्य च द्वित्वं भवति(१)। णेड्डं (स्पष्टम्) एन्नीडापीडे (१-१९) त्यादिना एत्वम्। सोत्तं (३-३ र्लोपः ४-६ अन्त्यलोपः ५-३० बिन्दुः) पेम्मं (३-३ र्लोपः बाहुलकाद् उभयत्र ४-१८ प्रवृत्तिर्न शेषं पूर्ववत्) वाहित्तं। (२) (२-२ य्लोपः १-२८ ऋ=इ ५-३० बिन्दुः) उज्जुओ (३)। (१-२९ ऋ=उ २-२ क्लोपः ५-१ ओ) जण्णओ। (२-४२ न्=ण् २-२ क्लोपः ५-१ ओ) जोव्वणं (१-४१ औ=ओ २-३१ य्=ज् २-४२ न्=ण् ५-३० बि०)। नीडम्, स्रोतः, प्रेम, व्याहृतम्, ऋजुकः, जनकः, यौवनम् ॥५२॥

## आम्रताम्रयोर्वः ॥ ५३ ॥

आम्र ताम्र इत्येतयोर्द्वित्वेन वकारो भवति। अव्वं। तव्वं (४)। (४-१ ह्रस्वः संयोगे ३-५० द्वि० (५-३० बिं०) ॥ ५३ ॥

## न रहोः ॥ ५४ ॥

रेफहकारयोर्द्वित्वं न भवति। धीरं। (१-३८ सू० स्पष्टम्) तूरं।

---

(१) अनादेशत्वादप्राप्ते विधिरयम् ॥ (२) इत्कृपादौ ८।१।१२८। हेमसूत्रे -कृपाद्यन्तर्गतव्याहृतस्य पाठात् ॥ (३) ऋणर्ज्वृषभर्त्वृषौ वा ८।१।१४१। इति हेमानुसारतः रिजू। उजू ॥ (४) हेमस्तु "ताम्राम्रे म्बः" अनयोः संयुक्तस्य मयुक्तो बो भवति। अम्बं। तम्बं इत्याह ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(३-१८ सू० स्पष्टं) जीहा। (१-१७ सू० द्रष्टव्यं) वाहो। (३-३८ सू० स्प०) धैर्यम्, तूर्यम्, जिह्वा, वाष्पः ॥ ५४ ॥

## आङो ज्ञस्य ॥ ५५ ॥

आङ उत्तरस्य ज्ञ इत्येतस्यादेशस्य द्वित्वं न भवति। आणा। (३-४४ ज्ञ् = ण्) आणत्ती। (पूर्ववत् ज्ञ् = ण् ३-१, प्लोपः ३-५० तृद्वि० ५-१८ दीर्घः) आज्ञा, आज्ञप्तिः। आङ इति किम्? सण्णा। (३-४४ ज्ञ् = ण् ३-५० ण् (द्वित्वम्) संज्ञा ॥ ५५ ॥

## न बिन्दुपरे ॥ ५६ ॥

अनुस्वारे परे द्वित्वं न भवति। संकन्तो। (३-३ रेफलोपः ४-१७ वर्गान्त० ४-१ ह्रस्वः ५-१ ओ) संझा। (३-२८ ध्य् = झ् ४-१७ वर्गान्त०)। संक्रान्तः, सन्ध्या ॥ ५६ ॥

## समासे वा ॥ ५७ ॥

समासे शेषादेशयोर्वा द्वित्वं भवति। णइग्गामो, णइगामो। २-४२ न् = ण् २-२ दूलोपः ३-३ रलोपः ४-१ ह्रस्वः, द्वित्वाभावे तु यथावदोकारः ५-१ ओ) कुसुमप्पअरो, (३-३ र्लोपे २-२ क्लोपः ५-१ ओ) कुसुमपअरो। (प्द्वित्वाभावः शे० पू०) देवत्थुई, देवथुई (३-१२ स्त् = थ् ३-५१ थ् = त् २-२ त्लोपः ५-१८ दीर्घः) आणालक्खंभो, अणालखंभो। (४-२६ परिवृत्तौ आनाले जाते २-४२ न् = ण ३-१४ स्त् = ख् ३-५१ ख् = क् ४-१७ वर्गान्त० ५-१ ओ)। नदीग्रामः, कुसुमप्रकरः, देवस्तुतिः, आलानस्तम्भः ॥ ५७ ॥

## सेवादिषु च ॥ ५८ ॥

सेवा इत्येवमादिषु चानादौ वा द्वित्वं भवति। सेव्वा, सेवा। (२-२ प्रायोग्रहणात् वलोपो न शेषं स्पष्टं) एक्कं, एअं। (द्वित्वाभावे २-२ कलोपः ५-३० वि०) णक्खो। (२-४२ न् = ण् द्वित्वपक्षे ३-५१ ख् = क् ५-१ ओ) णहो। द्वित्वाभावे २-२७ ख् = ह् ५-१ ओ) देव्वं, दइवं। (१-३७ सू० स्प०) असिव्वं, असिवं। तेलोक्कं, (१-३५ सू० स्प०) तेलोअं। (द्वित्वाभावे ३-१ कलोपः शे० पू०) णिहित्तो, (२-४२ न् = ण् द्वित्वे ५-१ ओ) णिहिओ। (द्वित्वाभावे २-२ तलोपः शे० पू०)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तुण्हिक्को, (३-३३ ष्ण्=ह्न ह्रस्वः संयोगे, कस्य द्वित्वे ५-१ ओ) तुह्णिओ। (द्वित्वाभावे २-२ क्लोपः शे० पू०) कण्णिआरो, कणिआरो। (३-३ र्लोपः २-२ क्लोपः द्वित्वभावाभावौ च (पू० ५-१ ओ) दिग्घं, (३-३ र्लोपः ३-५१ घ्=ग् ह्रस्वः संयोगे इति दी=दि ५-३० विं०) दीहं। (द्वित्वाभावे रलोपे च असंयोगपरत्वात् ह्रस्वाभावः २-२७ घ्=ह् शे० स्पष्टं) रत्ती, (३-३ र्लोपः ४-१ इ० ५-१८ दीर्घः) राई। (३-१ त्लोपः ३-३ र्लोपः) दुक्खिओ, (खद्वित्वे ३-५१ ख्=क् २-२ त्लोपः ५-१ ओ) दुहिओ। (द्वित्वाभावे २-२७ ख्=ह् शे० पू०) अस्सो, असो। (१-२ सू० द्रष्टव्यं) इस्सरो, (३-३ वलोपः २-४३ श्=स् द्वित्वे ह्रस्वः संयोगे ई=इ ५-१ ओ) ईसरो। (द्वित्वाभावे ह्रस्वाभावः शे० पू०) विस्सासो, वीसासो। णिस्सासो, णीसासो। (२-४२ न्=ण् शे० पू०) रस्सी, (३-२ मलोपः २-४३ श्=स् सुद्वित्वे ५-१८ दीर्घः) रसी। (द्वित्वाभावः शे० पू०) मित्तो, (३-३ र्लोपः ५-१ ओ) मिओ (१)। (द्वित्वाभावे ३-१ त्लोपः शे० पू०) पुस्सो, (३-२ य्लोपः २-४३ ष्=स् ५-१ ओ) पुसो। (द्वित्वाभावे शे० पू०)। सेवा, एकः, नखः, दैवम्, अशिवम्, त्रैलोक्यम्, निहितम्, तूष्णीकः, कर्णिकारः, दीर्घम्, रात्रिः, दुःखितः, अश्वः, ईश्वरः, विश्वासः, निश्वासः, रश्मिः, मित्रम्, पुष्यः,। उभयत्र विभाषेयम्। सेवादीनामप्राप्ते (२) दीर्घादीनां च प्राप्ते ॥ ५८ ॥

## विप्रकर्षः ॥ ५९ ॥

अधिकारोऽयम्। अपरिच्छेदसमासेर्युक्तस्य विप्रकर्षो भवति ॥५६॥

## क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्स्वरवत्पूर्वस्य ॥६०॥

क्लिष्टादिषु युक्तस्य विप्रकर्षो भवति विप्रकृष्टस्य च यः पूर्वो वर्णो

---

(१) 'तइ इन्दो निच्चिन्दो विहरदु अन्देउरम्मि सो दाव। इन्दस्य तावमित्तं हवेसि सुहिसामिआ तुमयं' इति कुमारपालचरिते ७ सर्ग ९३। 'त्वया इन्द्रो निश्चिन्तो विहरतु अन्तःपुरे स तावत्। इन्द्रस्य तावन्मित्रं भवसि महोस्रामिन् त्वम्। एतदनुसारेण सुहृद्वाचकमित्रशब्दो नपुंसकः सूर्य्यवाचकस्तु पुल्लिङ्गो भवितुमर्हति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(२) अनादेशत्वादशेषाच्चेति शेषः ॥

निरर्थस्तस्य तत्स्वरता भवति, तेनैव पूर्वेण स्वरेण पूर्वो वर्णः सार्थो भवति इत्यर्थः। किलिट्ठं। (ष्ठकारविप्रकर्षे लकारेण सह पूर्वस्वरतया च किलिजाते ३-१० ष्ट = ठः ३-५० ठद्वि० ३-५१ पूर्व०, ठ्=ट् ५-३० बिन्दुः) सिलिट्ठं। (२-४३ श्=स् शे० पू०) रअणं। (विप्रकर्षात् (रत) जाते ३-१ तूलोपः २-४२ न्=ण् ५-३० बिं०) किरिआ। (२-२ यलोपः विप्रकर्षादिकं पू०) सारङ्गो। (२-४३ श्=स् ४-१७ विं० ५-१ ओ)॥६०॥

## कृष्णे वा ॥६१॥

कृष्णशब्दे युक्तस्य वा विप्रकर्षो भवति पूर्वस्य च तत्स्वरता। व्यवस्थितविभाषेयम्। तेन वर्णे नित्यं विप्रकर्षः, विष्णौ तु न भवत्येव। कसणो। (१-२७ ऋ = अ ष्णस्य विप्रकर्षे (षण) जाते २-४३ ष्=स् २-४२ न्=ण् ५-१ ओ) कह्णो। (३-३३ सू० स्प०) ॥ ६१ ॥

## इः श्रीह्रीक्रीतक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षार्हगर्हेषु॥६२॥

एषु युक्तस्य विप्रकर्षो भवति पूर्वस्य इकारः तत्स्वरता च भवति। सिरी। (२-४३ श्=स् विप्रकर्षत्वे पूर्वस्य इत्वे तत्स्वरतायां च सीरो इति जातं) (एवं) हिरी। किरीतो(१)। किलन्तो। (विप्रकर्षे पूर्वस्येत्वे ४-१७ वर्गान्तो बिन्दुर्वा ५-१ ओ) किलेसो। (स्पष्टम्) मिलाणं। (पूर्ववत् इत्वं तत्स्वरता च २-४२ न्=ण् ५-३० विं०) सिविणो। (१-३ सू० स्प०) फरिसो। (३-३५ स्प्=फ् इत्वं तत्स्वरता च २-४३ श्=स् ५-१ ओ एवमुत्तरत्रापि) हरिसो। अरिहो। गरिहो (स्पष्टाः)। श्रीः, ह्रीः, क्रीतः, क्लान्तः, क्लेशः, म्लानम्, स्वप्नः, स्पर्शः, हर्षः अर्हः, गर्हः ॥ ६२ ॥

## अः क्ष्माश्लाघयोः ॥ ६३ ॥

क्ष्मा श्लाघा इत्येतयोर्युक्तस्य विप्रकर्षो भवति, पूर्वस्य अकारस्तत्स्वरता च भवति। खमा। (३-३१ क्ष्=ख् शे० स्प०। सलाहा। (२-४३ श्=स् विप्रकर्षः पूर्वस्याऽत्वं तत् स्वरता च २-२७ घ्=ह्) ॥६३॥

## स्नेहे वा ॥ ६४ ॥

स्नेहशब्दे युक्तस्य विप्रकर्षो वा भवति पूर्वस्य च अकारस्तत्स्वर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(१) प्रायोग्रहणान्न तलोपः॥

ता भवति। सणेहो, (पूर्ववत् विप्रकर्षादिकं २-४२ न् = ण् ५-१ ओ) णेहो। (३-१ सू० स्प०) ॥ ६४ ॥

## ङः पञ्चतन्वीसमेषु ॥ ६५ ॥

पञ्चशब्दे तन्वी इत्येवं समेषु च युक्तस्य विप्रकर्षो भवति पूर्वस्य च उकारस्तत्स्वरता च भवति। पउमं (१)। (३-२ पूलोपः शे० स्प०) तणुई। (२-४२ न् = ण् उत्वादिपू० वूलोपश्च)। लहुई। (२-२७ = घह् शे० पू०)। तन्वी। लघ्वी ॥ ६५ ॥

## ज्यायामीत् ॥ ६६ ॥

इति वररुचिविरचिते प्राकृतप्रकाशे तृतीयः परिच्छेदः ॥

---

ज्याशब्दे युक्तस्य विप्रकर्षो भवति पूर्वस्य च ईकारस्तत्स्वरता च। जीआ। (२-२ यलोपः) ॥६६॥ (२)

इति भामहविरचिते प्राकृतप्रकाशे युक्तवर्णविधि-
नाम तृतीयः परिच्छेदः ॥

---

# अथ चतुर्थः परिच्छेदः।

## सन्धावचामज्लोप(३)विशेषा बहुलम् ॥ १ ॥

अचामितिप्रत्याहारग्रहणम्। अजिति च। सन्धौ वर्तमानानामचां स्थाने अज्विशेषा लोपविशेषाश्च बहुलं भवन्ति। अज्विशेषास्तावत्, जउणाअडं, जउणाअडं। (२-३ सूत्रे स्पष्टं जउणा, तटमिति २-२ तूलोपः (४) २-२० ट् = ड् अत्र बहुलग्रहणात् 'णा' इत्यत्र ह्रस्वत्वं विकल्पेन ५-३० सोर्बिन्दुः) णइसोत्तो, णईसोत्तो (२-४२ न् = ण् २-२ दूलोपः ह्रस्वविकल्पः पू० सोत्तो ३-५२ सूत्रे द्रष्टव्यः अत्र विशेषः ४-१८ (५)

---

(१) ओत्पद्मे ८। १। ६१। तेन पोम्मं। हे० ॥ (२) का० पु० "इवेव" ॥६७॥ इवशब्दे व इति निपात्यते। प्पाण व्व धनं। अ० पा० ॥
(३) अयं पाठः का० पु० सम्मतः। इतः प्राचीनेषु अज् रूपविशेषा इति पाठः ॥
(४) वृत्तावयमनादिरेव गृह्यते ॥ (५) ३-५२ सूत्रे तु व्यत्ययेन नपुंसकत्वम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुं०) बहुसुहं, बहूसूहं । (२-२७ ख् = ह् ५-३० वि० शे० पू०) कण्णउरं, कण्णऊरं । (३-३ र्लोपः ३-५० णद्वि० २-१ प्लोपः शे० पू०) सिरोवे-अणा, सिरवेअणो । (२-४३ श्=स् ४-६ स्लोपे अविशेष ओ = सिरो इति, वेअणा १-३४ सू० स्प०, शे० पू०) पीआपोअं, पिआपिअं । सीआ-सीअं, सिआसिअं । (२-२ त्लोपः शेषं ह्रस्वविकल्पादि पूर्वं०) सवो-सुओ, (३-३ र्लोपः ओत्वमकारस्य २-२७ ख् = ह् ५-१ ओ) सवो-सूओ । (३-३ र्लोपः २-१५ प् = व् ओत्वसूत्वे बाहुलकात् शे० पू०) सरोरुहं, सररुहं । (४-६ स्लोपः ओत्वविकल्पः शे० स्प०) लोपवि-शेषाः, राउलं, राअउलं । (जलोपे विकल्पेनाऽलोपः २-२ कलोपः ५-३० वि०) तुहद्धं, तुहअद्धं । (६-३१ तव = तुह विकल्पेन बाहुलकादकारलोपे ३-३ रकारलोपः ५-३० वि०) महद्धं, महअद्धं । (६-५० मम = मह शे० पू०) वावडणं, वाअवडणं (२-१५ प् = व् २-२ दूलोपे बाहुलकाद् विक-ल्पेन अकारलोपे वापतनमिति जाते पुनः २-१५ प = व्-वावतन इति जाते ८-५१ त्=ड् २-४२ न्=ण् ५-३० विं०, अलोपाभावे स्पष्ट०) कु-म्भारो, कुम्भआरो । (अनादिग्रहणात् २-२ कलोपो न ४-१७ वर्गान्त० २-२ कलोपे ४-१ अकारोत्तरवर्त्यकारलोपे ५-१ ओं, अलोपाभावेऽस्पष्टं) पवणुद्धअं, पवणउद्धअं । (प्राय इति वलोपो न २-४२ न् = ण् पूर्ववद-कारलोपः पवण् उद्धतमिति जाते २-२ त्लोपः ५-३० विं०, अलोपा-भावे पूर्व०) यमुनातटं, नदीस्रोतस्, बहुसुखं, कर्णपूरं, शिरोवेदना, पीतापोतं, सीतासीतं (शीताशीतं), सर्वसुखः (सर्वमुखः), सरोरुहं, राजकुलं, तवार्द्धं, ममार्द्धं, पादपतनं, कुम्भकारः, पवनोद्धतम् ॥ संयो-गपरे सर्वत्र पूर्वस्याचो लोपः, [ह्रस्वश्च । यथा—णत्थि, सक्कन्ती, णिक्क-न्तो, अत्तो इत्यादयः] (१) (स्पष्टाः) । क्वचिन्नित्यं, क्वचिदन्यदेव बहुल-ग्रहणात् । तेनान्यदपि लाक्षणिककार्यं भवति ॥ १ ॥

## उदुम्बरे दोर्लोपः ॥ २ ॥

उदुम्बरशब्दे दु इत्येतस्य लोपो भवति । उम्बरं (४-१७ वर्गान्त्वः ५-३० सोर्विन्दुः) ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(१) [ ] (एतत्कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः ।

## कालायसे यस्य वा ॥ ३ ॥

कालायसशब्दे यस्य वा लोपो भवति। कालासं, कालाअसं। (स्प०) ॥ ३ ॥

## भाजने जस्य ॥ ४ ॥

भाजनशब्दे ज(१)कारस्य लोपो वा भवति। भाणं, भाअणं। (२-४२ न्=ण् ५-३० विं० पक्षे २-२ सूत्रेण केवलजकारलोपो भवति) ॥४॥

## यावदादिषु वस्य ॥ ५ ॥

यावदित्येवमादिषु व(२)कारस्य वा लोपो भवति। जा, जावता। तावता। (२-३१ य्=ज् ४-६ तलोपः, पक्षे स्प०) पाराओ, पारावओ। (२-२ त्लोपः ५-१ ओ, पक्षे स्प०) अणुत्तन्त, अणुवत्तन्त। (२-४२ न्=ण् वलोपे ३-३ रलोपः ३-५० तद्वि० ७-१० मान=न्त वलोपाभावे स्प०) जीअं, जोविअं। (२-२ त्लोपः ५-३० विं० शे० स्पष्ट०) एअं, एव्वं। (३-५८ व्द्वित्वं ५-३० विं०) एअ, एव्व। (३-५८ व् द्वि०) कुअलअं, कुवलअं(३)। (विकल्पेन स्वररहितवलोपे २-२ यलोपः ५-३० विं०)। यावत्, तावत्, पारावत, अनुवर्तमान, जीवितं, एवम्, एव, कुवलय इत्येवमादयः ॥ ५ ॥

## अन्त्यहलः ॥ ६ ॥

वेति निवृत्तम्। शब्दानां यो ऽन्त्यो हल् तस्य लोपो भवति। जसो (२-३१ य्=ज् २-४३ श्=स्, ४-१८ पुंस्त्वं ५-१ ओ) णहं। (२-४२ न्=ण् ४-१९ पुंस्त्वाभावः, ५-३० विं०) सरो। (जसोवत्) कम्मो ३-३ रलोपः ३-५० मद्वि० शे० पू०) जाव। ताव। (४-५ सू० द्रष्टव्यं) यशः, नभः, सरः, कर्म, यावत्, तावत् ॥ ६ ॥

## स्त्रियामात् ॥ ७ ॥

स्त्रियां वर्त्तमानस्यान्त्यहल आकारो भवति। सरिआ। (स्पष्टं) पडिवआ। (१-२ सू० स्प०) वाआ (स्प०)। सरित्, प्रतिपद्, वाक् ॥

(१) सस्वरस्य लोपो ज्ञेयः। हेमस्तु ८।१।२६७ सूत्रे सस्वरस्येति पठत्येव। (२) सस्वरलोपः क्वचिद्धलकारस्वररहितस्यापि ॥ (३) क० पु० चक्काओ, चक्कवाओ। देउलं, देवउलं। अ० पा० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## स्त्रियां रा ॥ ८ ॥

स्त्रियामन्त्यस्य हलो रेफस्य रा इत्ययमादेशो भवति। धुरा, गिरा। (स्प०) ॥ ८ ॥

## न विद्युति ॥ ९ ॥

विद्युच्छब्दे आकारो न भवति। विज्जू। (३-२७ द्य्=ज् ४-६ तूलोपः ३-५० जद्वि० ५-१८ दीर्घः)। विद्युत् ॥ ९ ॥

## शरदो दः ॥ १० ॥

शरच्छब्दस्यान्त्यहलो दो भवति। सरदो(१)। (२-४३ ४-१८ पु० श्=स् ५-१ ओ) ॥ १० ॥

## दिक्प्रावृषोः सः ॥ ११ ॥

दिक्छब्दस्यान्त्यहलः प्रावृट्शब्दस्यापि सकारो भवति। दिसा(२)। (स्प०) पाउसो। (१-३० सू० स्प०) ॥ ११ ॥

## मो बिन्दुः ॥ १२ ॥

अन्त्यस्य हलो मकारस्य बिन्दुर्भवति। अच्छं। (४-२० विकल्पेन पुंसि अमि ५-३ अमोऽकारस्य लोपः शे० ३-३० सू० स्प०) वच्छं। (स्प०) भद्दं। (३-३ रलोपः ३-५० द्वि० शे० पू०) अग्गिं (३-२ नलोपः ३-५० गद्वि० शे० पू०) दट्ठं। (३-१० ष्ट्=ठ् ३-५० ठद्वि० ३-५१ ठ्=ट् शे० पू०) वणं। घणं(३)। (२-४३ न्=ण् शे० पू०) ॥१२॥

## अचि मश्च ॥ १३ ॥

अचि परतो मो(४)भवति वा। फलमवहरइ, फलं अवहरइ (स्प०)(५)॥

## नञोर्हलि ॥ १४ ॥

नकारञकारयोर्हलि परतो बिन्दुर्भवति मकारश्च। नस्य, अंसो, अम्सो। (५-१ ओ शे० स्प०) कंसो, कम्सो। ञस्य, वंचणीअं,

---

(१) "शरदादेरत्" ८।१।१८ सरओ, शरद्। भिषओ, भिषक्। "क्षुधो हा" ८।१।१७ छुहा, क्षुत्। हे० ॥ (२) आपि कृते दिशाशब्दः प्रकृतिः। क्वचिद् दिशा, प्रावृड् इति संस्कृतदर्शनात् ॥ (३) अक्षः वत्सः भद्रं अग्निः, दष्टः, वनं, घनम् ॥ (४) क० पु० बिन्दुः पा० ॥ (५) फलमपहरति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वमूचणोत्रं। (२-४२ न्=ण २-२ यलोपः ५-३० विं० शे० स्प०) विंझो, विमूझो(१)। (३-२८ ध्य्=झ् नकारस्य विन्दौ मकारे च ३-५६ सूत्रेण द्वित्वादिबाधः) ॥ १४ ॥

## वक्रादिषु ॥ १५ ॥

वक्रादिषु शब्देषु विन्दुरागमो भवति। वंकं। (३-३ र्लोपः ५-३० विं०) तंसं। (३-३ ह्कारयोर्लोपः ३-२ यलोपः शे० स्प०) हंसो। (३-३ रेफलोपः वूलोपश्च ५-१ ओ) अंसू। (३-३ र्लोपः २-४३ श्=स् ५-१८ उर्दीर्घः) मंसू। (३-६ श्लोपः २-४३ श्=स् ३-३ र्लोपः ५-१८ दीर्घः) गुंठी। (१-२९ ऋ=उ ३-१० ष्ट्=ठ् ५-१८ दीर्घः) मंथं। (१-२२ उ=अ (२)३-१२ स्त्=थ ५-३० विं०) मणंसिणी। (१-२ सू० स्प०) दंसणं। (३-३ र्लोपः २-४३ श्=स् २-४२ न्=ण् ५-३० विं०) फंसो। (३-३६ सू० स्प०) वंगणो। (३-३ र्लोपः ३-५० णद्वि० ५-१ ओ) पडिंसुदं। (३-३ र्लोपः २-८ त्=ड् २-४३ श्=स् ३-३ र्लोपः १२-३ त्=द् ५-३० विं० २-४२ श्=स् ५-१ ओ ) अंसो (स्पष्टम्)। अहिमुंको(३)। (२-२७ भ्=ह् ३-१ तूलोपः ५-१ ओ)। वक्र, त्र्यस्र, ह्रस्व, अश्रु, श्मश्रु, गृष्टि, मुस्त, मनस्विनी, दर्शन, स्पर्श, वर्ण, प्रतिश्रुत, अश्व, अभिमुक्त, इत्यादयः ॥ १५ ॥

## मांसादिषु वा ॥ १६ ॥

मांसादिषु शब्देषु वा विन्दुः प्रयोक्तव्यः। मंसं, मासं। (स्प०) कहं, कह। (२-२७ थ्=ह्, शे० स्प०) णूणं, णूण। (स्प०) तहिं, तहि। (स्प०) असुं, असु (४)। (स्प०) तदयमपठितो मांसादिर्गणः। यत्र क्वचिद्वृत्तभङ्गभयात् त्यज्यमानः क्रियमाणश्च विन्दुर्भवति स मांसादिषु द्रष्टव्यः ॥ १६ ॥

---

(१) अंसः, कंसः, वञ्चनीयं, विन्ध्यः ॥ (२) मुकुटादेराकृतिगणत्वात्। (३) शक्त, मुक्त, रष्ट, रुग्ण, मृदुत्वे को वा ८। २। २ मुक्को-मुक्तोऽक्को दट्ठो लुक्को लुग्गो भाउक्कं भाउत्तणं इति हे०। अत्र अहिमुंको इत्यत्र मं विन्दुः परे इत्यनेन द्वित्वनिषेधो ज्ञेयः॥ (४) क० पु० मांसः, कथम्, नूनम्, तर्हि, असु अ० पा० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## यथि तद्वर्गान्तः ॥ १७ ॥

यथिपरतो बिन्दुस्तद्वर्गान्तो वा भवति । सङ्का । (२-४३ श् = स् शे० स्प०) सङ्खो । (५-१ ओ, शे० पूर्व०) अङ्को । अङ्गं । (स्प०) सञ्च-रइ । (७-१ ति=इ, शे० स्प०) सण्ढो । (२-४३ ष् = स्) सन्तरइ (स्प०)। सम्पत्ती । (५-१८ दीर्घः, शे० स्प०) । यथीति किम्? अंसो । (४-१३ सूत्रे स्प०) वाऽधिकारात् पंकं, बिंदू, संका, संखो । (सुगमानि) (१) ॥

## नसान्तप्रावृट्शरदः पुंसि ॥ १८ ॥

नकारान्ताः सकारान्ताश्च प्रावृट्शरदौ च पुंसि प्रयोक्तव्याः । नान्ताः कम्मो । (४-६ अन्त्यनकारलोपः ३-३ र्लोपः ३-५० मद्वि० ५-१ ओ) जम्मो । (३-४३ सू० स्प०) वम्मो । (३-३ र्लोपः ३-५० म्द्वि० ४-६ न्लोपः ५-१ ओ) सान्ताः, जसो । (२-३१ सू० स्प०) तमो । (४-६ स्लोपे पुंस्त्वे च ५-१ ओ) सरो, पाउसो । (१-३० सू० स्प०) सरदो(२)

## न शिरोनभसी ॥ १९ ॥

शिरस्, नभस् इत्येतो न पुंसि प्रयोक्तव्यौ । सिरं । (४-६ सलोपः ५-३० विं०) णहं ॥ १६ ॥

## पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २० ॥

एते स्त्रियां वा प्रयोक्तव्याः । पुट्ठी, पुट्ठं । (१-२९ ऋ = उ ३-१० ष्ठ =ठ ३-५० ठ्द्वि० ३-५१-ठ्=ट् स्त्रीत्वे ई, पक्षे पूर्ववत्कार्येषु कृतेषु ५-३० बि०) (एवम्) अच्छी, अच्छं । (३-३० सू० स्प०) अच्छो पुंस्त्वे तु (५-१ ओ) पण्हा, पण्हो । (३-३ लोपः ३-३३ श्न = ण्ह स्त्रीत्वे आत्वं, पुंस्त्वे ५-१ ओ) । पृष्ठम्, अक्षि, प्रश्नः ॥ २० ॥

## ओदवापयोः ॥ २१ ॥

अव, अप इत्येतयोरुपसर्गयोर्वा ओत्वं भवति । ओहासो, अव-

---

( १ ) शङ्काः, शङ्खः, कंसः, अङ्कः, अङ्गं, सञ्चरति, षण्ढः, सन्तरति, सम्पत्तिः, अंसः, पङ्कं, बिन्दुः ॥ ( २ ) कर्म्मन्, जन्मन्, वर्म्मन्, यशस्, तमस्, सरस्, प्रावृष्, शरदः । क्व सेयं वयं सुमणं सम्मं चम्ममिति दृश्यते तद्बाहुलका-धिकारात् इति हेमः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्रासो। ओसारिअं, अवसारिअं। (२-२ तलोपः ५-३० विं०)। अवह्रासः, अपसारितम् ॥ २१ ॥

## तल्त्वयोर्दात्तणौ (१) ॥ २२ ॥

तल्त्वइत्येतयोः प्रत्यययोर्यथासंख्यं दा, त्तण इत्येतावादेशौ स्तः। पीणदा। (२-४२ न्=ण) मूढदा। (१२-३ त्-द्) पीणत्तणं। मूढत्तणं (५-३० विं०) ॥ २२ ॥

## क्त्व ऊणः(२) ॥ २३ ॥

क्त्वा प्रत्ययस्य ऊणइत्ययमादेशो भवति। घेऊण। (८-१६ ग्रह्=घेत्) सोऊण। (३-३ रलोपः २-४३ श्=स् उ=ओ गुणेन (३) काऊण (८-१७ कृञ्=का) दाऊण। (स्पष्टं)। गृहीत्वा, श्रुत्वा, कृत्वा, दत्त्वा ॥ २३ ॥

## तृण(४) इरः शीले ॥ २४ ॥

शीले यस्तृन् प्रत्ययो विहितस्तस्य इर इत्ययमादेशो भवति। भ्रमणशीलो भमिरो (५)। हसनशीलो हसिरो। (५-१ ओ स्पष्टमाये) ॥२४॥

## आल्विल्लोल्लालवन्तेन्ता मतुपः ॥ २५ ॥

आलु, इल्ल, उल्ल, आल, वन्त, इन्त, इत्येत आदेशा मतुपः स्थाने भवन्ति। आलुस्तावत्, ईसालू (३-३ रलोपः २-४३ ष्=स् आलुकृते ५-१८ दीर्घः) विद्दालू। (२-४२ न्=ण् ३-३ रलोपः ३-५० द्वित्वं शे० पू०) इल्लः, विआरिल्लो (६)। (२-२ कलोपः इल्लेकृते ५-१ ओ) मालाइल्लो। (५-१ ओ शेष० स्प०) उल्लः, विआरुल्लो। (२-२ कलोपः शे० स्प०) आलः (७), धणाली। (२-४२ न्=ण् ५-१) सद्दालो (३-३

---

(१) त्वतलोः प्पणः ८। ४। ४३७। अपभ्रंश। इति हे० ॥ (२) का० पु० पा० 'उण्' इति पा० ॥ (३) युवर्णस्य गुणः ८। ४। २३७। धातोरिवर्णोवर्णस्य ङ्कित्यपि गुणः। जेऊण, नेऊण, नेइ, नेन्ति, उड्डेइ, उड्डेन्ति, मोत्तूण, सोऊण। क्वचिन्न नीओ-उड्डीणो इ० हेमच० ॥ (४) का० पा० तृन् ॥ (५) क्वचिद् भमिरो पा० ॥ (६) का० पा० विआर इल्लः ॥ (७) का० पा० अल्लः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्लोवः ३-५० द्वित्वि० ५-१ ओ) वन्तः, धणवन्तो । (रूप०) जोवण-वन्तो । (२-३१ य्=ज् प्राय इति वलोपो न २-४२ न्=ण् ५-१ ओ) । इन्तः (१), रोसाइन्तो (२) । (२-४३ ष्=स् ५-१ ओ) पाणाइन्तो । (३-३ र्लोपः शे० पू०)(३) । यथादर्शनमेते प्रयोक्तव्याः, न सर्वे सर्वत्र । ईर्ष्यावत्, निद्रावत्, विकारवत्, मालावत्, धनवत्, शब्दवत्, यौवनवत्, रोषवत्, प्राणवत् ।

["क्वचिदा मतुपोऽन्त्यस्य मन्तो वा दृश्यते क्वचित् ।"

हणुमा, हणुमन्तो । (२-४३ न्=ण् मतुपोऽन्त्यस्यात्व पक्षे मन्तादेशः ५-१ ओ) ॥

"इल्लोल्लावपरे प्रायः शैषिकेषु प्रयुञ्जते" ॥

पौरस्त्यं, पुरोभवं, पुरिल्लं । (पुरस् अत्र ४-६ सलोपे च शैषिक इल्ल प्रत्यये ४-१ अलोपे ५-३० बि०) । आत्मीयं-अप्पुल्लं । (३-४८ त्म्=प् ३-५० पद्वि० ४-६ नलोपः ४-१ अलोपः उल्लप्रत्ययः ५-३० बि०) ॥

"परिमाणे किमादिभ्यो भवन्ति केद्दहादयः ॥"

केद्दहं, केत्तिअं । जेद्दहं, जेत्तिअं । तेद्दहं, तेत्तिअं । एद्दहं, एत्तिअं । (किमः केद्दह, केत्तिअ । यदो जेद्दह, जेत्तिअ । तदो तेद्दह, तेत्तिअ । एतद एद्दह, एत्तिअ इत्यादेशाः भवन्तीत्यर्थः ५-३० विन्दुः सर्वत्र)

"कृत्वसो हुत्तमित्यन्ये देशीशब्दः स इष्यते" ॥

सअहुत्तं (२-४३ श्=स् २-२ तलोपे कृत्वसो हुत्तादेशे ५-३० बि०) सहस्सहुत्तं । (३-३ रलोपः ३-५० सद्वि० शे० पू०) ।

"जातौ वा स्वार्थिकः कः (४) ॥"

जातौ स्वार्थे ककारः प्रयोक्तव्यः ] (५) ।

(पद्म, पदुमअं, पक्षे पदुमम्(६)(७) ॥ २५ ॥

---

(१) का० पा० इतः ॥ (२) का० पा० रोसः ॥ (३) एपु सर्वत्र लोपादिकमज्विशेषकार्यं ४-१ सूत्रेण वोध्यम् ॥ (४) केचिद् सूत्ररूपेण पठन्ति ॥ (५) क० पु० न दृश्यते [ ] कोष्ठकान्तर्गतः पाठः ॥ (६)( ) कोष्ठा-न्तर्गतः पाठः प्रायस्त्रुटित एव ॥ (७) अतोऽडैत्तुलः ८ । ४४३५ । अपभ्रंशे इदं किं यत्तदेतद्भ्यः परस्य अतोः प्रत्ययस्य डेत्तुल इत्यादेशो भवति । एत्तुलो, केत्तुलो, जेत्तुलो, तेत्तुलो, एत्तुलो ॥ इति हेमः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## विद्युत्पीताभ्यां वा(१) लः ॥ २६ ॥

विद्युत्पीतशब्दाभ्यां परतः स्वार्थे लप्रत्ययो भवति । विज्जू, (३-२७ द्यु = ज्‌ ३-५० जद्वि० ५-१८ दीर्घः) विज्जुली, (इवन्तः स्त्रियां शे० पू०) पीअं (२-२ तलोपः ५-३० विं०) पीअलं(२) । (स्प०) ॥ २६ ॥

## वृन्दे वो रः ॥ २७ ॥

वृन्दशब्दे वकारात्परः स्वार्थे रेफो वा प्रयोक्तव्यः । व्रन्दं (१-२७ ऋ=अ, वकारात्परे रेफे कृते ४-१७ वर्गान्तः ५-३० विं०) वंदं(३) । (१-२७ ऋ=अ शे० स्प०) ॥ २७ ॥

## करेण्वां रणोः स्थितिपरिवृत्तिः ॥ २८ ॥

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिर्भवति । कणेरू । पुंसि न भवति (४), करेणू (५-१८ दीर्घः) ॥ २८ ॥

## आलाने लनोः ॥ २९ ॥

आलानशब्दे लकारनकारयोर्हल्मात्रयोः स्थितिपरिवृत्तिर्भवति । आणालखम्भो । (३-५७ सू० स्प०) ॥ २९ ॥

## बृहस्पतौ बहोर्भऔ ॥ ३० ॥

बृहस्पतिशब्दे बकारहकारयोर्यथासंख्यं भकाराकारौ भवतः । भअप्फई(५) । (१-१७ ऋ=अ बह-इत्यस्य भअकृते ३-३५ स्प = फ् ३-५१ द्वि० २-२ तलोपः ५-१८ दीर्घः) ॥ ३० ॥

## मलिने लिनोरिलौ वा ॥ ३१ ॥

मलिनशब्दे लिकारनकारयोर्यथासंख्यमिकारलकारौ वा भवतः । मइलं, मलिणं । (पक्षे २-४२ न्=ण ५-३० विं०) ॥ ३१ ॥

## गृहे घरोऽपतौ ॥ ३२ ॥

गृहशब्दे घर इत्ययमादेशो भवति । पतिशब्दे परतो न भवति ।

---

(१) वेति सार्वत्रिको न ॥ (२) क० पु० विद्युत्, पीतवर्ण इत्यर्थः । अ० पा० ॥ (३) वृन्दं विन्दं क्वचित्पाठः ॥ (४) क्वचिद् करेण्वामिति स्त्रीलिङ्गनिर्देशात् । अ० पा० ॥ (५) का० पा० भअप्पई । सूत्रे हयौ इतिपाठे हयप्पई इत्युदाहार्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घरं । (५-३० विं०) भवनम् । अपताविति किम् ? गहईव(१) । (१-१८ ऋृ=अ २-१५ प्—व् २-३ तलोपः ५-१८ दीर्घः) ॥ ३२ ॥

### दाढादयो बहुलम् ॥ ३३ ॥

दाढाइत्येवमादयः शब्दा बहुलन्निपात्यन्ते दंष्ट्रादिषु । दंष्ट्रा, दाढा । इदानीं, एण्हि । दुहिता, धीआ, धूदा(२) । चातुर्यं, चातुलिअं । मण्डूकः मण्डूरो । गृहेनिहितं घरेणिहितं । उत्पलं कन्दोट्टं । गोदावरी गोला । ललाटं णिडालं । भ्रूः भुमआ(३) । वैदूर्यं वेलुरिअं । उभयपार्श्वं अवहोवासं । चूतः माइंदो, माअंदो । (दंष्ट्रादिषु दाढादयो निपातसिद्धाः शब्दाः संस्कृतशब्दानुसारेण देशसंकेतप्रवृत्तभाषाशब्दानुसारेण च यथायथं लिङ्गेषु प्रयोज्याः स्पष्टाश्चैतेऽतोऽलंविस्तरेण) । आदिशब्दोऽयं प्रकारे तेन सर्व एव देशसंकेतप्रवृत्तभाषाशब्दाः परिगृहीताः ॥ ३३ ॥

इति प्राकृतप्रकाशे संकीर्णविधिर्नाम चतुर्थः परिच्छेदः ।

---

## अथ पञ्चमः परिच्छेदः ।

### अत ओत् सोः ॥ १ ॥

अकारान्ताच्छब्दात्परस्य सोः स्थाने ओत्वं भवति । वच्छो । (१-३२ । ३-३० । ३-३१ सूत्रेषु स्पष्टम्) वसहो । (१-२७ । २-४३ सू० स्प०) पुरिसो । (१-२३ सू० स्प०) । वृक्षः, वृषभः, पुरुषः ॥ १ ॥

### जश्शसोर्लोपः ॥ २ ॥

अत इत्यनुवर्तते । आकारान्तस्यानन्तरं यौ जश्शसौ तयोर्लोपो भवति । वच्छा सोहंति । "जश्शस्ङस्यांसु दीर्घः" इति दीर्घे कृते पश्चाल्लोपो जसः (१-२७ ऋृ=अ ३-३१ छत्वविकल्पः(४) ३-५० द्वि० ३-५१ छ्=च् ५-११ जसि दीर्घे कृते लोपः, सोहंति इति २-४३ श्=स् २-२७ भ्=ह् ७-४ न्ति) । वृक्षाः शोभन्ते । वच्छे णिअच्छह । "ए च सुपी"त्येत्वे कृते शसो लोपः । (पूर्ववत् वृक्ष = वच्छ ५-१२ एत्वे कृते

---

(१) गृहपतिः ॥ (२) का० पा० दिधी, धिया, दिट्ठी, धुआ ॥
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri
(३) का० पा० भूमआ ॥ (४) वत्सशब्दप्रयोगे तु ३-४० त्स=छ ॥

शसो लोपः, णिअच्छइ इति २-४२ न् = ण् २-२ यलोपः ७-१८ त् = इ) वृक्षान्नियच्छत ॥ २ ॥

अतो मः ॥ ३ ॥

अकारान्तस्यानन्तरं योऽम् द्वितीयैकवचनं तदकारस्य लोपो भवति। वच्छं पेक्खइ। "मो विन्दुः" (४-१२) इति विन्दुः वृक्षं पश्यति ॥ ३ ॥

टामोर्णः ॥ ४ ॥

अतोनन्तरं टामोस्तृतीयैकवचनषष्ठीबहुवचनयोर्णकारो भवति। वच्छेण। "ए च सुपी"त्येत्वम्। (५-१२ एत्वे कृते टा = ण) वच्छाण "जश्शस्ङस्यांसु दीर्घ" इति दीर्घः वृक्षेण, वृक्षाणाम् ॥ ४ ॥

भिसो हिं ॥ ५ ॥

अतोनन्तरस्य भिसो हिं भवति। वच्छेहिं। "ए च सुपी"त्येत्वम् (५-१२ एत्वं शे० स्प०) वृक्षैः ॥ ५ ॥

ङसेरादोदुहयः ॥ ६ ॥

अतोनन्तरस्य ङसेः पञ्चम्येकवचनस्य स्थाने आ, दो, दु, हि, इत्येत आदेशा भवन्ति। वच्छा, वच्छादो, वच्छादु, वच्छाहि। जश्शस्ङस्यांसु(१)दीर्घत्वम्। (स्पष्टाः) वृक्षात् ॥ ६ ॥

सो हिंतो सुन्तो ॥ ७ ॥

अतोनन्तरस्य भ्यसो, हिंतो, सुन्तो, इत्येतावादेशौ भवतः। वच्छाहिंतो, वच्छासुन्तो। "ए च सुपी (५-१२)-ति चकारेण दीर्घत्वम् (स्पष्टे) वृक्षेभ्यः ॥ ७ ॥

स्सो ङसः ॥ ८ ॥

अतोऽनन्तरस्य ङसः स्स इत्यादेशो भवति। वच्छस्स (स्प०) वृक्षस्य ॥ ८ ॥

ङेरेम्मी ॥ ९ ॥

अतोनन्तरस्य ङेः ए, म्मि इत्यादेशौ भवतः। वच्छे, वच्छम्मि।

(१) का० पा० जस्भ्यस्ङस्यासु ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"क्वचिड्ङसिङ्योर्लोपः। (५-१३)" इत्यकारलोपः। (६५०) वृत्ते ॥ ९ ॥

सुपः सुः ॥ १० ॥

अतोनन्तरस्य सुपः सु इत्यादेशो भवति। वच्छेसु। वृक्षेषु। (एवं वत्सशब्दरूपाण्यपि बोध्यानि)। "एच सुपी (५-१२)" त्येत्वम् ॥

जश्शस्ङस्यांसु दीर्घः ॥ ११ ॥

जसादिषु परतोऽतो दीर्घो भवति। वच्छा सोहन्ति। जश्शसोर्लोप इति जसो लोपः, (५-२ सू० स्पष्टं) वत्सा शोभन्ते। वच्छादो, वच्छादु, वच्छाहि, आगदो। वत्सात्। ङसेरादोदुहयः (५-६) वच्छाण। वत्सेन। "टामोर्णः (५-४)" ॥ ११ ॥

ए च सुप्यङिङसोः ॥ १२ ॥

अतोकारस्यैत्वं भवति सुपि परतो ङिङसौ वर्जयित्वा चकारादीर्घश्च। वच्छे (वत्सान्) पेक्खह। ' जश्शसोर्लोपः (५-२) (१२-१८ दृश्=पेक्ख ८-१९ थ्=ह=पश्यत) वच्छेण। टामोर्णः। वत्सेन। वच्छेहिं (=वत्सैः)। वच्छेसु (वत्सेषु) चकाराद्दीर्घश्चेति। वच्छाहितो, वच्छासुतो (वत्सेभ्यः)। भ्यसो हिंतो, सुन्तोऽअङिङसोरिति किम्। वच्छस्मि (वत्से)। वच्छस्स (वत्सस्य) ॥ १२ ॥

क्वचिद् ङसिङ्योर्लोपः ॥ १३ ॥

अतो ङसि, ङि इत्येतयोः परतः क्वचिल्लोपो भवति। वच्छा आगदो। ङसेरादोदुहय इति आ। (आगदो इति आङ् पूर्वकगमेः क्तान्तस्य १२-३ त=द् ५-१ ओ) वच्छेठिअं (वत्सेस्थितम्) ङेरस्मी इत्येत्वम् (ठिअं० स्था=ठ शेषं संस्कृतवद्) ॥ १३ ॥

इदुतोः शसो णो ॥ १४ ॥

इदुदन्तयोः शसो णो भवति। अग्गिणो पेक्खह (४-१२ सूत्रे अग्गि इत्यत्र निष्पादिताद् शसो=णो=अग्नीन्) वाउणो पेक्ख (२-२ यलोपः शे० पू०=वायून्, 'पेक्ख' इति शौरसेन्यां दृशेः पेक्खादेशो भवति तस्याश्च "प्रकृतिः संस्कृतम्" इति संस्कृतवद् हेर्लुक् भवति) ॥१४ ॥

ङसो वा ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदुदन्तयोर्ङसो वा णो भवति। अग्गिणो, अग्गिस्स (स्पष्ट=)

वाउणो, वाउस्स (२-२ यलोपे कृते ङसो णो, पक्षे ५-८=स्स) अग्नेः वायोः ॥ १५ ॥

## जसश्च ओ यूत्वम्(१) ॥ १६ ॥

इदुदन्तयोर्जस ओकारादेशो भवति। इदुतोश्च ईत्वं, ऊत्वं वा चकाराद् णो च। अग्गीओ, वाऊओ। अग्गिणो, वाउणो (२पश्चानि= अग्नयः, वायवः) ॥ १६ ॥

## टा णा ॥ १८ ॥

इदुदन्तयोष्टाविभक्तेः णा इत्ययमादेशो भवति। अग्गिणा, वाउणा (स्पष्टे=अग्निना-वायुना) ॥ १७ ॥

## सुभिस्सुप्सु दीर्घः ॥ १८ ॥

इदुदन्तयोः सु, भिस्, सुप् इत्येतेषु दीर्घो भवति। सु, अग्गी (३-२ नलोपः ३-५० गद्वि० ४-६ सोर्लोपः शे० स्प० अग्निः) वाऊ (२-२ यलोपः शे० स्प० वायुः) भिस्, अग्गीहिं(४-६ सोर्लोपः ५-५ भिस्= हिं =अग्निभिः) वाऊहिं। (२-२ यलोपः शे० पू०=वायुभिः) सुप्, अग्गीसु (३-२ नलोपः ३-५० गद्वि० दीर्घः २-४३ ष्=स्=अग्निषु) वाऊसु २-२ यलोपः दीर्घः २-४३ ष्=स्= वायुषु) ॥ १८ ॥

## स्त्रियां शस उदोतौ(२) ॥ १९ ॥

स्त्रियां वर्तमानस्य शस उत् ओत् इत्येतावादेशौ भवतः। मालाउ, मालाओ। (स्पष्टे=मालाः) णईउ, णईओ (२-२ न्=ण् २-२ दलोपः शे० स्प०=नदीः)। वहूउ, वहूओ २-२७ ध्=ह् शे० स्प० वधूः) ॥१९॥

## जसो वा (३) ॥ २० ॥

जसः स्त्रियाम् उत् ओत् इत्येतावादेशा वा भवतः। पक्षे अदन्तवत्। मालाउ, मालाओ। माला ( स्प०, अदन्ते ५-२ जसो लोपः=मालाः॥२०॥

---

(१) जस आ वो वाऽत्वं यूत्वं च। इदुदन्तयोः शब्दयोर्जस ओ वो इत्यादेशौ भवतः। अत्वं, ईत्वं, ऊत्वं, च विकल्पेन। चकारात् णोऽपि। पक्षे अदन्तवत्। अग्गीओ, अग्गीवो, अग्गवो, अग्गी। वा ऊओ। जसश्च ओ यूत्वं। का० पा०। (२) स्त्रियां जश्शसोरुदोतौ। का० पा०। (३) ङसो वा। का० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अमि ह्रस्वः ॥ २१ ॥

अमि परतः स्त्रियां ह्रस्वो भवति । मालं ( ह्रस्वे जाते ५-३ अकारलोपः ४-१२ मकारबिन्दुः =मालाम्) णइं (२-४२ न्=ण् २-२ दलोपः ४-१ अभोऽकारलोपः ४-१२ विं=नदीम् ) वहुं (२-२७ ध्=ह् शे० पूर्व० ) वधूम् ॥ २१ ॥

## टाङस्ङीनामिदेददातः(१) ॥ २२ ॥

टा, ङस्, ङि, इत्येतेषां स्त्रियाम् इत्, एत्, अत्, आत् इत्येत आदेशा भवन्ति । टा, णईइ, णईए, णईअ, णईआ कअं । (५-२१ सू० नकारस्य ण, दलोपश्च दर्शितः शे० स्प० = नद्या) (कअं इति १-२७ सू० स्प० = कृतम्) ङस्, णईइ, णईए, णईअ, णईआ, वणं । (णईपूर्ववत् अन्यत्स्पष्टं = नद्याः) (वणं इति ४-१२ सू० स्प०) ङि, णईइ, णईए, णईअ, णईआ ठिअं (पूर्ववत् णईशब्दः शे० सुगमं = नद्यां) (ठिअं इति ५-१२ सू० स्पष्टं = स्थितम्) ॥ २२ ॥

## नातोऽदातौ ॥ २३ ॥

आत-आकारान्तस्य स्त्रीलिङ्गस्यानन्तरं टाङस्ङीनाम् अत्, आत्, इत्येतावादेशौ न भवतः । पूर्वेण प्राप्तौ निषिध्यते । मालाइ, मालाए कअं, धणं, ठिअं । (५-२२ सूत्रादिदेतावेव भवतः, अ० स्प०=मालया) ॥

## आदीतौ(२) बहुलम् ॥ २४ ॥

स्त्रियामाकारान्तादातः स्थाने आत् ईत इत्येतौ बहुलं प्रयोक्तव्यौ । सहमाणा, सहमाणी । (२-४२ न्=ण् शे० स्प०) हलद्दा, हलद्दी । (१-१३ सूत्रे द्रष्टव्ये) सुप्पणहा, सुप्पणही । (३-३ रलोपः ३-५० पद्धि० ४-१ ह्रस्वः २-४२ न्= ण २-२७ ख् = ह् शे० स्प०) छाहा, छाही । (२-१८ सू० द्रष्टव्यं शे० स्प०)(३) ॥ २४ ॥

---

(१) टाङसिङस्ङीनामिदेददातः। का० पा०। (२) आदितौ—अदितौ। का० पा०। (३) यत्तत्किमः। बहुलमित्यनुवर्तते। यत्तत्किमित्येतेषु परतः आसः स्थान ईत्ययमादेशो भवति। स्त्रियामित्यनुवर्तते । प्रथमैकवचनवर्ज ए आदेशश्च बहुलवचनात । जीए, तीए, कीए, जीहिं, तीहिं, कीहिं । पक्षे । जाए, ताए, काए, जाहिं, ताहिं, काहिं यस्याः, तस्याः, कस्याः, याभिः, ताभिः, काभिः । इति क्वचिदधिकः पाठः। का० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## न नपुंसके ॥ २५ ॥

प्रथमैकवचने नपुंसके दीर्घत्वं न भवति। सौ दीर्घः पूर्वस्येत्यनेन इदुदुन्तयोः प्राप्तं पूर्वस्य दीर्घत्वं न नपुंसके इत्यनेन बाध्यते। दहिं (५-३० सोर्बिन्दुः शे० स्प०)। महुं (२-२७ घ्=ह् शे० स्प०) हविं। (४-६ षूलोपः २-२ प्रायो ग्रहणात् वलोपो न शे० पू०) दधि, मधु, हविः ॥ २५ ॥

## इज्जश्शसोर्दीर्घश्च ॥ २६ ॥

नपुंसके वर्तमानयोर्जश्शसोः स्थान इदादेशो भवति पूर्वस्य च दीर्घः। वणाइ। (२-४२न्=ण् जश्शसोरिदादेशः पूर्वस्य दीर्घः = वनानि) दहीइ। महूइ (पू०) ॥ २६ ॥

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २७ ॥

आमन्त्रणे गम्यमाने सौ परत ओत्वदीर्घबिन्दवो न भवन्ति। "अत-ओत्सो"रित्योत्वं प्राप्तम्। "सुभिस्सुप्सु दीर्घ" इति दीर्घः। "सोर्बिन्दुर्नपुंसक" इतिबिन्दुः प्राप्तः। हे वच्छ, हे अग्गि हे वाउ, हे वण, हे दहि, हे महु (व्याख्यातप्रायाः पूर्वमेव, विशेषकृत्यं सुस्पष्टम्) ॥ २७ ॥

## स्त्रियामात एत् ॥ २८ ॥

स्त्रियामामन्त्रणे आतः स्थाने एत्वं भवति सौ परतः। हे माले हे साले। (स्पष्टं) "अन्त्यस्य हल" इति सोर्लोपः ॥ २८ ॥

## ईदूतोर्ह्रस्वः ॥ २९ ॥

आमन्त्रणे ईदूतोर्ह्रस्वो भवति। हे णइ, हे वहु ॥ २९ ॥

## सोर्बिन्दुर्नपुंसके ॥ ३० ॥

नपुंसके वर्तमानस्य सोर्बिन्दुर्भवति। वणं, दहिं, महुं। (स्प०) ॥३०॥

## ऋत आरः सुपि(१) ॥ ३१ ॥

ऋकारान्तस्य सुपि परत आर इत्यादेशो भवति। भत्तारो सोहइ (३-५० तद्धि० ५-१ ओ=भर्ता) (२-४३ श्=स् युवर्णस्य गुणः २-२७ भ्=ह् ७-१ त=इ=शोभते) भत्तारं पेक्खमु (५-३ अमोऽकार-

(१) सौ। का० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोपः ४-१२ मविं० शे० पू० भर्तारं) (१२-१८ दृश=पेक्ख ७-४ मु=पश्यामः) भत्तारेण कअं (५-१२ एत्वं ५-४ टा=ण) ॥ ३१ ॥

## मातुरात् ॥ ३२ ॥

मातृसम्बन्धिन ऋकारस्याकारो भवति। माआ। (२-२ तलोपः) सोहइ। (२-४३ श्=स् सोहन्तिवत् गुणः ७-१ इ=शोभते) माअं पेक्खसु (३-३ तलोपः ह्रस्वः ५-३ अमोऽकारलोपः ४-१२ विं०। अस्प०) माआइ माआए (२-२ तलोपः आत्वे कृते ५-२२ कअं) ॥३२॥

## उर्जश्शस्टाङस्सुप्सु वा(१) ॥ ३३ ॥

जश्शस्टाङस्सुप्सु परत ऋकारस्य स्थाने उकारादेशो भवति वा। जस्, भत्तुणो (३-३ रलोपः ३-५० तद्वि० ५-१६ णो) भत्तारा। (५-३१ ऋ=आर ५-११ दीर्घः ५-२ जसो लोपः शे० पू०) शस्, भत्तुणो (५-१४ शसो=णो शे० पू०) भत्तारे (५-३१ आर ५-१२ एत्वं ५-२ शसो लोपः शे० पू०) टा, भत्तुणा (५-१७ टा=णा शे० पू०) भत्तारेण (पू० व० रलोपादिकं ५-३१ आर ५-१२ एत्वं ५-४ टा-ण) ङस्, भत्तुणो (५-१५ णो शे० पू०) भत्तारस्स (रलोपे तद्वित्वे च कृते ५-३१ आर ५-८ ङसः स्सः) सुप्, भत्तूसु (५-११ दीर्घः शे० स्प०) भत्तारेसु (५-२२ एत्वं शे० पू०) ॥ ३३ ॥

## पितृभ्रातृजामातॄणामरः ॥ ३४ ॥

पित्रादीनां सुपि परत ऋतोऽरो भवति। आरापवादः। पिअरं (२-२ तलोपः ५-३ अमोऽकारस्य लोपः ४-१२ मो बिन्दुः) पिअरेण (५-१२ एत्वं ५-४ टा=ण शे० पू०) भाअरं, भाअरेण। जामाअर, जामाअरेण (पूर्ववत्) ॥ ३४ ॥

## आ च सौ(२) ॥ ३५ ॥

पित्रादीनामाकारो भवति सौ परतः। चकारादरश्च। पिआ (स्पष्टं) पिअरो (५-१ ओ शे० स्प०) भाआ, भाअरो। जामाआ, जामाअरो ॥

---

(१) उ जश्शस्टाङस्सुप्सु वा। का० पा०। (२) आ च सौ। का० पा०।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri.

राज्ञश्च ॥ ३६ ॥

राजन् शब्दस्य आ इत्ययमादेशो भवति सौ परतः। राआ (स्पष्टं) ॥

आमन्त्रणे वा बिन्दुः ॥ ३७ ॥

राजन् शब्दस्य आमन्त्रणे वा बिन्दुः स्यात्। हेराअं (४-६ नलोपः २-२ जलोपः शेषमदन्तवत्)। हराअ (५-२७ बिन्दुर्न ॥ ३७ ॥

जश्शस्ङसां णो ॥ ३८ ॥

राज्ञ उत्तरेषां जस शस् ङस् इत्येतेषां णो इत्ययमादेशो भवति। राआणो (पूर्ववत् नलोपे कृते ५-४४ ज=आ शे० स्प०) पेक्खन्ति (पूर्ववत् दृशेः पेक्ख आदेशे झिस्थाने ७-४ न्तिः=राजानः पश्यन्ति) राआणो पेक्ख (शसि रूपमेतत्स्पष्टं पूर्ववत्=राज्ञः पश्य) राइणो धणं (४-६ नलोपः २-२ जलोपः ५-४३ इः=राज्ञः) रण्णो (धणं २-२ जलोपः ५-४२ णद्वि० अन्त्यलोपश्च अलोपो ह्रस्वश्च संयोगे ४-१ सूत्रे द्रष्टव्यम्) ॥ ३८ ॥

शस एत् ॥ ३९ ॥

राज्ञः परस्य शस ए इत्ययमादेशो भवति। राए पेक्ख (नजयोः पूर्ववल्लोपः ४-१ आलोपः=राज्ञः) (पूर्ववत् पेक्खादेशः=पश्य) राआणो पेक्ख (पूर्वसूत्रे स्पष्टम्) ॥ ३९ ॥

आमो णं ॥ ४० ॥

राज्ञ उत्तरस्यामः षष्ठीबहुवचनस्य णं इत्ययमादेशो भवति। राआणं (४-६ नलोपः ५-४४ ज=आ=राज्ञाम्) ॥ ४० ॥

टा णा ॥ ४१ ॥

राज्ञ उत्तरस्याः टाविभक्तेः णा इत्ययमादेशः स्यात्। राइणा (४-६ नलोपे ५-४३ ज=इ शे० स्प०=राज्ञा) ॥ ४१ ॥

ङसश्च द्वित्वं वान्त्यलोपश्च(१) ॥ ४२ ॥

राज्ञ उत्तरस्य ङसादेशस्य टादेशस्य च वा विकल्पेन द्वित्वं

(१) ङस ङसि टाम णोणौ ङण २-२५६। राजन् शब्दस्य अना सहितस्य जस्य, ङस्, ङसि, टावचनानां णो, णा इत्यादेशौ, तयोः परयोर्ङण् इत्यादेशो वा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवति । अन्त्यस्य च लोपः । रण्णो (५-३८ सूत्रे स्पष्टं) राइणो धणं । (५-४१ सूत्रे स्प०) रण्णा, राइणा कअं । (४-६ नलोपः ५-४१ टा=णा द्वित्वे अन्त्यजलोपे ह्रस्वे च) ॥ ४२ ॥

## इद्द्वित्वे ॥ ४३ ॥

वेति निवृत्तम् । ङसादेशस्य टादेशस्य च अकृते द्वित्वे राज्ञ इत्वं भवति । राइणा, राइणो । (स्प०) कृते द्वित्वे त्विवत्वं न भवति रण्णा, रण्णो (५-४२ सू० ५-३८ सूत्रे च स्पष्टं) ॥ ४३ ॥

## आ णोणमोरङसि ॥ ४४ ॥

णोणमोः परयो राज्ञो जकारस्य आकारादेशः स्यात् अङसि । षष्ठ्येकवचने न भवति । राआणो पेक्खन्ति । राआणो पेक्ख । (५-३८ सूत्रे व्याख्याताः) । राआणं धणं (५-४० सू० स्प०) । अङसीति किम् ? राइणो, रण्णो धणं । शेषमदन्तवत् । राअं, राएहिं । राआ, राआदो, राआदु । राआ । ( ५-६ सूत्रेण दो-दु-हयः ङसेः स्थाने प्रयुज्यन्ते शे० स्प०) राआहितो, आसुंतो (५-७ भ्यसः हिंतो-सुंतो-आदेशौ) राअम्मि, राए (५-६ ङेः ए-म्मि) । राएसु (५-१२ एत्वे शे० स्प०) राजानं, राजभिः, राज्ञः, राजभ्यः, राज्ञि, राजसु ॥ ४४ ॥

## आत्मनोऽप्पाणो वा ॥ ४५ ॥

आत्मनोऽप्पाण इत्यादेशो भवति वा । अप्पा, अप्पाणो ( ४-६ नलोप० शे० स्प०) ॥ ४५ ॥

## इत्वद्वित्ववर्जं राजवदनादेशे ॥ ४६ ॥

आत्मनोऽनादेशे राजवत्कार्यं स्यादित्वद्वित्वे वर्जयित्वा । अप्पा, अप्पाणो, अप्पणा, अप्पणो । (५-३८ सूत्रानुसारतः जसादीनां णोत्वादिकं सर्वं राजवत् )आत्मा, आत्मानः, आत्मना, आत्मनः ॥ ४६ ॥

## ब्रह्माद्या आत्मवत् (१) ॥ ४७ ॥

ब्रह्माद्याः शब्दा लक्ष्यानुसारेणात्मवत् साधवो भवन्ति । बह्मा,

---

भवति । टिलोपः । रण्णा । राजन् णा कृते 'अन्त्यहल' इति नकारलोपे जस्य [illegible] इति [illegible] भवति । इति [illegible]कः० ।

(१) पुंस्यन आणो राजवच्च ८ । ३ । १६ । पुंलिङ्गे वर्तमानस्यानन्तस्य आण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

